# ॥ श्री सरभ साळुव कल्पम् ॥

# ஸ்ரீ சரப சாளுவ கல்பம்

## Sri Sarabha Saluva Kalpam

விரோதி வருடம் - 2009


ஆசிரியர்

ப்ரஹ்மஸ்ரீ எஸ். சங்கரநாராயணன்

(ஸ்ரீவித்யாரத்ன ஸ்ரீவித்யா விபூஷண ப்ரஹ்மஸ்ரீ ஸத்யானந்தநாத:)


(மூலம் - ஆகாச பைரவ கல்பம்)


வெளியிடுபவர்: ஸ்ரீராஜமதாங்கி ஸ்ரீவித்யா பீடம்,

62/3, 28 வது குறுக்குத் தெரு, இந்திராநகர், அடையார், சென்னை-600020

தொலைபேசி: 24421420

शरभ साळुव मन्त्र:
आवरण पूजा
शरभेशाष्टकं
माला मन्त्रं
शरभ कवचं
दैसिक स्तोत्रं
शरभ भुजंग प्रयाद स्तोत्रं
शरभ हृदयं
शरभ मन्त्र राज:
श्री शरभ माला मन्त्रं
निग्रह दारुण सप्तकं
माया
भद्र काळि
शूलिनि
सुमीकरण स्तोत्रं
क्रियाभेद:
सर्वलोक वशङ्करं
वीरभद्र कल्पं
जगत्क्षोभणप्रयोग:
सर्वजयं संक्षोभणं मन्त्राणां राजराजो
आग्नेयास्त्र मन्त्रस्य
भैरव प्रयोगं
लक्ष्मि
सिद्धभैरव प्रयोग:
क्षेत्रपाल भैरव:
दिक्पाल प्रयोग:
कामराजं
पीठशक्ति:
रक्त चामुण्डि
मोहिनी
द्राविणि
शब्दाकर्षिणी
भाषा प्रयोग:
माया
पुलिन्दिनी
महा शास्ता
सम्क्षोभिणी
धूमावती

(மூலம் - ஆகாச பைரவ கல்பம்)

# शरभ साळुव मन्त्रः

अस्य श्री शरभसाळुव महामन्त्रस्य
वामदेव ऋषिः अति जगती छन्तः कालाग्नि रुद्रो देवता॥
ओं खं बीजं स्वाहा शक्तिः फट् कीलकं
मम श्री शरभसाळुव प्रसाद सिध्यर्त्ते जपे विनियोगः

| कर | अङ्ग |
|---|---|
| ओं खें खां खं फट् अङ्गुष्टाभ्यां नमः | हृदयाय नमः |
| प्राण ग्रहासि प्रणग्रहासि तर्जनीभ्यां नमः | शिरसे स्वाहा |
| हुं फट् मध्यमाभ्तां नमः | शिखाय वषट् |
| सर्व शत्रु सम्हरणाय अनामिकाभ्या नमः | कवचाय हुं |
| शरभ साळुवाय कनिष्टिकाभ्यां नमः | नेत्रत्रयाय वौषट् |
| पक्षिराजाय हुं फट् स्वाहा करतलकर पृष्टाभ्यां नमः | अस्त्राय फट् |

ओं भूर्भुवस्सुवरोमिति दिग् बन्दः

**ध्यानं**

चन्द्रार्काग्नि त्रित्रिपुटि कुलिचवर नगच्चञ्जलात्युग्र जिह्वः
काली दुर्गा च पक्षौ हृदय जठ्रगौ भैरवो वाटवाग्निः॥

ऊरुस्थौ व्याधिमृत्यु शरभखगवरश्चण्डवातातिवेगः
संहर्ता सर्वशत्रून् स जयति शरभः सालुवः पक्षिराजः
मृगस्त्वर्धशरीरेण पक्षाभ्यां चञ्चुना द्विजः
गोरवक्त्रश्चतुष्पादः ऊर्ध्व वक्त्रश्चतुर्भुजः
कालान्त दहनौ पुष्यौ नीलजीमूत निस्वनः
अरिस्तद्दर्शनातेव विनिष्टफल विक्रमः
सटा छटोग्र रूपाय पक्षविक्षिप्त भूपुते
अष्टपादाय रुद्राय नमः शरभ मूर्त्तये॥
लं इत्यादि पंच पूजा॥

## मूल मंत्रं

ओं खें खां खं फट् प्राणग्रहासि प्राणग्रहासि हुं फट् सर्वशतृ
संहरणाय शरभ सालुवाय पक्षिराजाय हुं फट् स्वाहा॥

# आवरण पूजा

**यंत्रं**

त्रिकोणं विलिखेत्पूर्वं तद्बहिर् वृत्तमालिखेत्
तद्बहिश्चाष्ट पत्रं तु द्वादशारं ततः परं
षोडशारं ततः पश्चात् ततो भूपुरयुग्मकं
त्रिकोण मध्ये देवेशं शरभं शालुवेश्वरं
(त्रिकोणम् वृत्तं, ८ दलम्स् १२ दलम्, १६ दलम्, भूपुरं

**त्रिकोणस्य बहिः पश्चिमादिदिक्षु प्रादक्षिण्येन**

भैरवाय नमः
बाटवाग्नये नमः
दुर्गायै नमः
काल्यै नमः

**अष्टदले**

इन्द्राय नमः
अग्नये नमः
यमाय नमः
निरृतये नमः
वरुणाय नमः
वायवे नमः
सोमाय नमः
ईशानाय नमः

**त्रिकोणस्य वाम दक्ष पुरे**

मृत्यवे नमः
व्यादये नमः

**द्वादश दळ कमले**

कामाय नमः
चामुण्डाय नमः
मोहिन्यै नमः
द्राविण्यै नमः
सप्ताकर्षिणे नमः
भारत्यै नमः
महालक्ष्म्यै नमः
मायायै नमः
पुलिन्दिसन्यै नमः
शास्त्रे नमः
संक्षोभिण्यै नमः
धूमावत्यै नमः

**षोडसदळ कमले**

अं ब्रह्मणे नमः
आं पराशक्त्यै नमः
इं विष्णवे नमः
ईं मायायै नमः
उं वराहायै नमः
ऊं प्रितिव्यै नमः
रुं विदये नमः
रूं शिवाय नमः
लुं अश्विनौ नमः
ॡं अस्विभ्यां नमः
एं वीरभद्राय नमः
ऐं भारत्यै नमः
ओं शिवाय नमः
औं शंकराय नमः
अं रुद्राय नमः
अः कालरुद्राय नमः

प्रथम भूपुरः – अग्नि ईश असुर वायु दिक्षुषु चतुर् मूलेषु
गणेशाय नमः
यमाय नमः
स्कन्दाय नमः
भैरवाय नमः
त्वरितायै नमः
वीरभद्राय नमः
भटबानल भैरवाय
महामायायै नमः

**बहिर् भूपुरे**
ब्राह्यै नमः
माहेश्वर्यै नमः
कौमार्यै नमः
वैष्णव्यै नमः
वाराह्यै नमः
इन्द्राण्यै नमः
चामुण्डायै नमः
महालक्ष्म्यै नमः

**बहिर् भूपुर समये**
कं ब्रह्मणे नमः
खं जान्हव्यै नमः
गं गणेशाय नमः
घं भैरवाय नमः
ङं कालाय नमः
चं भद्रकाल्यै नमः
छं भीमकाल्यै नमः
जं जातवेदसे नमः
ञं अर्धनारीश्वराय नमः
ज़् परमात्मने नमः
थं पृथिव्यै नमः
ठं चन्द्राय नमः
डं शुक्राय नमः
ढं विष्णवे नमः
णं बलभद्राय नमः
तं धनदाय नमः
थं पराशक्त्यै नमः
धं दुर्गायै नमः
टं धर्माय नमः
नं निर्विकल्पाय नमः
पं अग्नये नमः
फं भैरवाय नमः
बं अस्त्रिभ्यां नमः
भं भार्गवाय नमः
मं ईश्वराय नमः
यं वायवे नमः
र कृसानवे नमः
लं चक्राय नमः
वं वरुणाय नमः
शं शंकराय नमः
षं द्वादशादिभ्यः नमः
सं भारत्यै नमः
हं सदाशिवाय नमः
ळं पृथिव्यै नमः
क्षं नृसिंहाय नमः

**बलि मन्त्रः**
ओं नमो भगवते स्मशानरुद्राय नररुदिर मांस भक्षणाय कपाल मालाधराय प्रेतवाहनाय खड्ग कपालहस्ताय सर्वभूतातिपतये क्लां धां हां एह्येहि आगच्चागच्च समस्त भूतरोगान् नाशय नाशय सर्वरिपून् नाशय नाशय क्लें धें ह्लें इदं पुंक्ष्व पुंक्ष्व क्लूं भ्लूं ह्लूं सर्व सौभाग्यं देहि देहि स्वाहा.

# शरभेशाष्टकं

श्री शिव उवाचः
श्रुणु देवि महा गुह्यं परमं पुण्यं विवर्धनं शरभेशाष्टकं मंत्रं वक्ष्यामि तव तत्वतः (१)

ऋषिन्यासादिकं यत् तत्सर्वं पूर्ववदाचरेत् ध्यानमेदं विशेषेण वक्ष्यांयहमतः शिवे(२)

ज्वलन कुटिलकेशं सूर्य चंद्राग्नि नेत्रं निचितंतर नकाग्रोद्धृतहेमापि देहम्
शरभगद मुनीन्द्रैःसेव्यमानं सितांगम् प्रणतभय विनाशं भावयेत् पक्षिराजम्.(३)

देवादि देवाय जगन्मयाय शिवाय नालीक निभाननाय
सर्वाय भीमाय शराधिपाय नमो अस्तु तुभ्यं शरभेश्वराय(४)

हराय भीमाय हरिप्रियाय भवाय शांताय परात्पराय
मृडाय रुद्राय विलोचनाय नमो अस्तु तुभ्यं शरभेश्वराय(५)

शीतांशु चूडाय दिगंबराय सृष्टि स्थिति ध्वंसन कारणाय
जटाकलापाय जितेन्द्रियाय नमो अस्तु तुभ्यं शरभेश्वराय(६)

कलंग कण्ठाय भवांतकाय कपाल शूलात्त करांभुजाय
भुजंग भूषाय पुरांतकाय नमो अस्तु तुभ्यं शरभेश्वराय(७)

शमादिषट्काय यमांतकाय यमादि योगाष्टक सिद्धिदाय
उमाधि नाथाय पुरातनाय नमो अस्तु तुभ्यं शरभेश्वराय(८)

घृणादि पाशाष्टक वर्जिताय खिलीकृतास्मत्पथि पूर्वगाय
गुणादि हीनाय गुणत्रयाय नमो अस्तु तुभ्यं शरभेश्वराय(९)

कालाय वेदामृत कंदलाय कल्याण कौतूहल कारणाय
स्थूलाय सूक्ष्माय स्वरूपगाय नमो अस्तु तुभ्यं शरभेश्वराय(१०)

पंचाननायानिल भास्कराय पंचाशदर्णाध्य पराक्षराय
पंचाक्षरेशाय जगद्धिताय नमो अस्तु तुभ्यं शरभेश्वराय(११)

नीलकंठाय रुद्राय शिवाय शशिमौलिने
भवाय भवनाशाय पक्षिराजाय ते नमः(१२)

परात्पराय घोराय शंभवे परमात्मने
शर्वाय निर्मलांगाय साळुवाय नमो नम:(१३)

गंगाधराय सांबाय परमानन्द तेजसे
सर्वेश्वराय शान्ताय शरभाय नमो नम:(१४)

वरदाय वरांगाय वामदेवाय शूलिने
गिरिशाय गिरीशाय गिरिजापतये नम:(१५)

कनक जठरकोद्यद्रक्त पानोन्मदेन प्रथित निखिलपीडा नारसिंहेन जाता
शरभ हरशिवेच त्राहि न: सर्वपाणा दनिचमिह कृपाब्धे साळुवेश प्रभोत्वम्(१६)

सर्वेश सर्वाधिक शांतमूर्तये कृतापराधानभरानथान्यान्
विनीय विश्व विधायि नीते नमोस्तु तुभ्यं शरभेश्वराय(१७)

दंष्ट्रा नखोग्र: शरभ: सपक्षश्चतुर्भुजच्चाष्टपद: सहेति:
क्रोटीर गंगेन्दुधरो नृसिंह क्षोभापहोस्मद्रिपुहास्तु शंभु:(१८)

हूङ्कारी शरभेश्वरोष्ट चरण: पक्षी चतुर्बाहुक: पादाकृष्ट नृसिंह विग्रहधर: कालाग्नि कोटिद्युति:
विश्व क्षोभहर: सहेतिरनिशं ब्रह्मेन्द्र मुख्यै: स्तुतो गंगा चन्द्रधर: पुरत्रयहर: सध्यो रिपुघ्नो अस्तु न:(१९)

म्रुगांग लांगूल सचंचु पक्षो दम्ष्ट्राननांघ्रीश्च भुजासहस्र:
त्रिनेत्र गंगेन्दुधर: प्रभाट्य: पायादपायाछशरभेश्वरो न:(२०)

नृसिंह मत्युग्रमतीव तेज: प्रकाशितं दानव भंग दक्षम्
प्रसांतिमन्तं विदधाति यो मां सो अस्मानपायाछशरभेश्वरो न:(२१)

यो अभूत् सहस्रांशु शतप्रकाश: स पक्षि सिंहाकृतिरष्टपाद:
नृसिंह संक्षोभ शमात्तरूप: पायादपयाछशरभेश्वरो न:(२२)

त्वां मन्युमंतं प्रवदंति वेदास्त्वां शान्तिमन्तं मुनयो गृणन्ति
दुष्टे नृसिंह जगदीश्वरे ते सर्वापराधं शरभ क्षमस्व (२३)

करचरण कृतं वाक् कर्मजं कायजं वा श्रवण नयनजं वा मानसं वापराधम्
विहितमविहितं वा सर्वमेतत् क्षमस्व शिव शिव करुणाब्धे श्री महादेव शंभो (२४)

रुद्रः शंकरः ईश्वरः पशुपतिः स्थाणु कपर्दी शिवो वागीशो वृषभध्वजः स्मरहरो भक्त प्रियस्त्रयंबकः
भूतेशो जगदीश्वरश्च वृषभो मृत्युंजयः श्रीपतिर् यो अस्मान् कालगलो अवतारात्पुरहरः शंभुः पिनाकी हरः
(२५)

यतो नृसिंहं हरसि हर इत्युच्यते बुधैः यतो बिभर्त्ति सकलं विभज्य दनुमष्टधा (२६)
यतो अस्मान् पाहि भगवन् प्रसीद च पुनः पुनः इति स्तुतो महादेवः प्रसन्नो भक्तवत्सलः (२७)

सुरानाह्लादयामास वरदानैरभीप्सितैः प्रसन्नो अस्मि स्तवेनाहमनेन विबुधेश्वराः (२८)

मयि रुद्रे महादेवे भयत्वं भक्तिमूर्जितम् ममांशो अयं नृसिंहो अयं मयी भक्ततमस्त्विह (२९)

इमं स्तवं जपेध्यस्तु शरभेशष्टकं नरः तस्य नश्यंति पापानि रिपवश्च सुरोत्तमः (३०)

नश्यंति सर्वे रोगाणि क्षयरोगादिकानि च अशेष ग्रह भूतानि कृत्रिमाणि ज्वराणि च (३१)

सर्प चोराग्नि शार्दूल गजपोत्रिमुखानि च अन्यानि च वनस्थानि नास्ति भीतिर्न संशयः (३२)

इत्युक्त्वान्तर् दधे देवि देवान् शरभसाळुवः तत्रते स्वस्वधामानि मयुराह्लाद पूर्वकम् (३३)

एतच्शरभकं स्तोत्रं मन्त्रभूतं जपेन्नरः सर्वान् कामान् अवाप्नोति शिवलोकं च गच्चति. (३४)

# माला मन्त्रं

## श्री शिव उवाच:

मालामन्त्रं प्रवक्ष्यामि रहस्यं श्रृणु शोभने
मन्त्र स्मरण मात्रेण करस्था: सर्वसिद्धय:

ॐ नम: पक्षिराजाय निशि कुलिश वर दंष्ट्रा नखायानेक कोटि ब्रह्म कपाल मालालंकृताय सकल कुल महा नाग भूषणाय सर्व भूत निवारणाय नृसिंह गर्व निर्वापण कारणाय सकलरिपु रंभाटवी विमोटन महानिलाय शरभ साळुवाय ह्रां ह्रीं ह्रूं प्रवेशय प्रवेशय रोग ग्रहं बंधय बंधय बाल ग्रहं बंधय बंधय आवेशय आवेशय भाषय भाषय मोहय मोहय कंपय कंपय बंधय बंधय भूतग्रहं बंधय रोगग्रहं बंधय यक्षग्रहं बंधय पातालग्रहं बंधय चातुर्थ ग्रहं बंधय भीमग्रहं बंधय राक्षस ग्रहं बंधय ज्वालाग्रहं बंधय ज्वालामुखग्रहं बंधय तमोहारग्रहं बंधय भूचर ग्रहं बंधय केचरग्रहं बंधय वेताळग्रहं बंधय कूष्माण्ड ग्रहं बंधय स्त्री ग्रहं बंधय पाप ग्रहं बंधय विक्रम ग्रहं बंधय व्युत्क्रम ग्रहं बंधय प्रेत ग्रहं बंधय पिचाचग्रहं बंधय आवेश ग्रहं बंधय अनावेश ग्रहं बंधय सर्वग्रहान् मर्धय सर्व ग्रहान् त्रोटय त्रोटय प्रैं त्रैं हैं मारय शीग्रं मारय मुंच मुंच दह दह पच पच नाशय नाशय सर्वदुष्टान् नाशय नाशय हुं फट् श्वाहा

अरुण मरुण मालालंकृता शंकराग्रै विधृत परशु शक्तिं पुष्प बाणेक्षु चापम्
विविध फण फणीन्द्रैर् भूषणैर्भूषितांगं शरभ मखिल नादं नौम्यहं साळुवेशम्.

## आकर्षणादि प्रयोगा:

१. **वश्यं**

मारं वर्तुल मध्यगे वसुधले मायां च लक्ष्मीं तथा
बाह्ये क्षोणिपुटे लिकेत् प्रतिदिशं ब्लूं कारकं भूपुरे
मारं साध्य समन्वितं रिपु जयं लोकाय मोहाकरं
नारी वश्य महो विचित्रमचिरात् साम्राज्य लक्ष्मी प्रदं
मारं = क्लीं   माया = ह्रीं   लक्ष्मी – श्रीं

२. **आकर्षणं**

आलेख्यं वृत्त मध्ये मरुदनल गृहं द्वंद्वके शकितलक्ष्मीं
तत्बाह्ये षट्दलान्त: शरभ मनुमथो सप्तकं सप्तकं च
औंकारं तस्य बाह्ये तदनु परिवृतं सात्यमाकर्षयेत्तां
त्रैलोक्यस्थामदृष्टां स्त्रियमपि विविधान्याशु भूतानि चैतत्.
मरुत् – अं   शक्ति – ह्रीं   लक्ष्मी –श्रीं

३. स्तंबन विध्वेषणं

त्रिनयनमथ शुकाभं श्याम मालावतंसं मुसल हल स्थांगं मुष्टिदाभीतिहस्तं
ग्रहण् रिपु पिशाच स्तंभ विद्वेषसिद्यै प्रतिदिन मद मन्त्रं भावयेत् सालुवेशं

स्तम्भनं

मद्ये शक्तिं सभूमिं बहिरभि पृथ्वी कोणके शक्ति भीजं तत् बाह्ये कोणषट्के शरभ मनुमथो बाह्यके भूमि कोणे भूमिं शक्तिं च बाह्ये प्रणवमथ भहिस्साधकं स्तंभनाख्यं शत्रूणामास्य दृष्टि श्रुति मुख हनु पत्प्राणिनां यंत्रमेतत्.

**विध्वेषणं**

खंकारं वृत्त मध्ये तदुपरि कमले लांतकं शक्तियुक्तं तत्बाह्ये शकिकोणे ध्वज वृषभ मुकान्यालिखेत् कोणशूले आलेख्यं साध्यमेतत् सकलमपि ततस्तार माया भिवीतं विध्वेषं यन्त्रमेतत् त्रिभुवनमपि किं स्वल्पकानां नराणां॥

**लान्तकम् – हुं**

४. मारणं

ज्वलदनल समाभं सूर्यचन्द्राग्नि नेत्रं स्वकरकलित शूलं खड्ग खेटं कपालम् सकल रिपु जनानां कर्ण हृद्वाग् विभिन्नं स्मरतु शरभमेवं मारणोच्चाटनाय
वायुं सद्वृत्तमध्ये तदनु भृगुगृहे पावकं तस्य बाह्ये षट्कोण शाळुवेशं त्रिशिखमथ बहिस्तस्य रेखाग्र साध्यं तत्बाह्ये शक्ति बीजं जय विजय युतं दीपिका वीतमन्त्रं शत्रूणां भूत रोग ग्रह गण समरोच्चाटनं चैवमेतत्.

**५. सर्व संहार चक्रं**

**बीजं स्वाहेश कोणे ऋतुग्रुह विवरे वायु बीजं ससाध्यम् तत् भीजं साष्टकोणे शिखि सहितमथो साध्यकं चाष्टपत्रे वह्न्यर्णं साध्य पूर्णं भुवि भुवनमथो साध्य युक्तं दशारे व्योमाख्यं साध्ययुक्तं शरभमनुवृतम् सर्व संहारचक्रम्.**

**६. अस्त्र मन्त्रं**

**सालुवेशाय विध्महे पक्षिराजाय धीमहि तन्नो रुद्रः प्रचोदयात् ॥**
**एतदस्त्रं महामन्त्रं जपेन्मंत्रं सदांबिके तस्य सर्व भयं नास्ति स्वप्ने अभि च कदाचन.**
**शरभास्त्रमिदं प्रोक्तममोघं जयवर्धनं तत्प्रभावं दृशा द्रष्टुं न सहंतेऽमरासुराः**
**कुतो नर–पिशाचाश्च क्षुद्र भूताभिचारकाः ग्रह ग्राम वृताः क्लिष्टाः खेचराः पृथिवीचराः॥**
**तस्मादेवं जपेन् नित्यमष्टोत्तर शतं सुधीः मन्त्रपूतं समाक्रष्टुं कालेनापि न शक्यते**
**बुद्धिमान् शरभं घोरमंत्र राजं महामनुं न्यास भावं जपं कुर्यादन्वहं पापमुक्तये.**

# शरभ कवचं

**श्री देव्युवाचः**
सर्वज्ञ्य सर्वमन्त्रास्य सर्वाचार्य शिव प्रभो शरभं कवचं दिव्यं सर्वरक्षाकरं परं
वज्र पञ्जर नमाक्यं वद मे करुणाकर

**श्री शिव उवाच.**
वक्ष्यामि श्रुणु देवि सर्वरक्षण मद्भुतं शारभं कवचं नाम चतुर् वर्ग फलप्रदं
शरभ श्रीसाळुव पक्षिराजाख्य कवचस्य तु
सदाशिवः रुषिः ब्रुहती छन्दः शरभेश्वरो देवता
औं भीजं प्रकृतिः स्ःअक्तिः पक्षिराजाक्य कीलकं
परः प्रयोगः शान्त्यर्थं सर्व शत्रु निव्रुत्तये चतुर्दर्गार्थ सिध्यर्थे जपे विनियोगः

**ध्यानं**
**रक्ताभं सुप्रसन्नं त्रिनयनं अम्रुतोन्मत्त भाषाभिरामं कारुण्यांभोधिमीशं वरदमभयदं**
**चन्द्ररेखावतंसं शङ्ख द्वानाखिलाशा प्रति हत विधिना भासमानात्म भावं**
**सर्वेशं सालुवेशं प्रणत भयहरं पक्षिराजं नमामि.**

**ॐ श्री शिवः पुरतः पातु माया धीशस्तु पृष्टतः**
**पिनाकी दक्षिणं पातु वाम पार्श्वं महेश्वरः(१)**
**शिखाग्रं पातु मे शम्भुर्निटिलं पातु शङ्करः**
**ईश्वरो वदनं पातु भ्रुवोर्मध्यं पुरान्तकः(२)**
**भ्रूवौ पातु मम स्थाणुः कपर्दी पातु लोचने**
**शर्वो मे श्रोत्रकेः पातु वागीशः पातु लम्बिकाम्(३)**
**नासिके मे वृषारूढो नासाग्रं वृषभध्वजः**
**स्मरारिः पातुमे तालू चोष्टयोर् भक्तवत्सलः(४)**
**पातु मृत्युञ्जयो दन्तान् चिभुकं पातु भूतराट्**
**परमेशः कपोलौ मे त्रिकं पातुः कपाल भृत्(५)**
**कण्ठं पशुपतिः पातु शूली पातु हनू मम**
**स्कन्धद्वयं हरः पातु धूर्जटि पातु मे भुजौ(६)**
**भुजसन्धिं महादेवः ईशानो मे प्रकूर्परम्**
**मध्यसन्धी जगन्नाथः प्रकोष्टे चन्द्रशेखरः(७)**
**मणिभन्धे त्रिणेत्रो मे भीमः पातु करस्तले**
**करपृष्टे मृडपातुः रुद्रो अङ्कुष्टद्वयं मम(८)**
**उमा सहायस्तर्जन्यौ भर्गो मे पातु मध्यमे**
**अनामिके करालास्यः कालकण्ठः कनिष्ठिके(९)**
**गङ्गाधरो अङ्गुली पर्वाणि अप्रमेयो नखानि मे**
**वक्षः तत्पुरुषः पातु कक्षे दक्षाध्वरान्तकः(१०)**

अघोरः हृदयं पातु वामदेव स्तनद्वयं
फालदृक् जटरं पातु नाभिं नारायणोऽव्ययः(११)
गुह्यं प्रजाकरः पातु कुक्षिपार्श्वे महाबलः
सत्योजातः कटिं पातु पृष्टभागं तु भैरव.(१२)
मोहनो जघनं पातु कृदं मम जितेन्द्रियः
ऊरूयुगं हरः पातु जानुयुग्मं भवान्तकः (१३)
हुङ्कारः पातुमे जङ्घे फट्कारो मम गुल्फके
खट्कारः पादपृष्ठे मे वषट्कारों अङ्ग्रिणोस्थले (१४)
श्वाहाकारों अङ्गुली पार्श्वे स्वाधा कारों अङ्गुलीर्मम
त्वरितः सन्धिबन्धं मे रोम कूपाणि सिंहाजित् (१५)
त्वचः पातु मनोवेगः कालजित् रुधिरं मम
पुष्टिदः पातु मे मांसं मेदो मे स्वस्तिदो अवतु(१६)
सर्वात्मास्थिचयं पातु मज्जानां मम जगत्प्रभुः
शुक्लं बुद्धिकरः पातु बुद्धिं वाचामधीश्वरः (१७)
मूलाधारांबुजं पातु भगवान् शरभेश्वरः
स्वाधिष्टानमजः पातु मीणपूरं हरिप्रियः (१८)
अनाहतं सालुवेशः विशुद्धिं जीवनायकः
सर्वज्ञानप्रदो देवो ललाटं मे सदाशिवः (१९)
ब्रह्मरन्ध्रं महादेवः पक्षिराजो अकिलात्मवान्
सर्वलोक वशीकारः पातुमां परगर्वजित् (२०)
वज्रमुष्टि वराभीतिहस्तः कालाग्निसन्निभः
विजया सहितः पातु चैन्द्रीं ककुभमग्निजित् (२१)
शक्ति शूल कपालासि हस्तः सौधामिनीप्रभः
जयायुतो महाभीमः पातु वैश्वानरीं दिशम् (२२)
दण्डासिमुसलीसीर पाशाङ्कुश करांभुजः
यमान्तको अजितायुक्तः दिशं यांयां सदाऽवतु २३)
खड्ग खेडाग्नि परशु हस्तः शत्रु विमर्धनः
अपराजितया युक्तः सदाव्यान् नैर्ऋतिंदिशम्(२४)
पाशाङ्कुश धनुर्बाणी पाणिर्घोणीयुतो अग्रगः
हरिद्राभो अनिशं पायात् वारुणीं दिशामात्मजित्(२५)
ध्वज चक्रगदाकुन्तभुजो दुर्कायुतो अव्ययः
चण्ड वेगः शिवः पातु सततं मारुतीं दिशम्(२६)
गदाक्षस्रग् वराभीति कराम्भोज श्रियायुतः
कनकाभो महातेजाः पातु कौबेरकीं दिशम्(२७)
त्रिशूलाहि कपालाग्निदोस्तलो विद्ययायुतः
भस्मोद्धूलित सर्वाङ्गो दिशं पातु शिवप्रियाम्(२८)
जपास्रक् पुस्तकां भोज कमन्डलुं कराम्बुजः
ऊर्ध्वं पातु गिरायुक्तः सर्वभूतहितेरतः (२९)

शङ्ख चक्र गदा भीति हस्तः पद्मायुतो अव्ययः
कालाञ्जन समोनीलः पातालं पात्वनारतम् (३०)
अनुक्ताविदिशः पातु साळुवो नारसिंह जित्
शरभः पातु सङ्गामे युद्धे वैरि कुलान्तकः(३१)
सर्व सौभाग्यदः पातु जाग्रत् स्वप्न सुषुप्तिषु
सर्व सम्पत् प्रदः पातु धनधान्यादिकं मम(३२)
सन्तानदः सुरतान् पातु पुत्रानायुष्करो अनिशं
बन्धून् वृद्धिकरः पातु ग्रुहं सर्ववशङ्करः(३३)
ग्रामं ग्रामेश्वरः पातु राज्यं पातु दिगम्बरः
राष्ट्रं शान्तिकरः पातु राजानं धर्मशासकः(३४)
मार्गं दुष्टहरः पातु धर्मकर्माणि भैरवः
वटुकः पातु मे सर्वं व्यवस्थासु भयेषुच(३५)
साधकः प्रणवं ध्यायन् ज्वलद्विदिः प्रज्वलद्वयम्
प्रत्यावृत्ति चतुर्थ्यन्तं रक्ष रक्षोति चोच्चरेत्॥(३६)
स्पर्श स्पर्श जपं कृत्वा प्रतिस्थानं समाहितः
प्रार्थयेद्खिलं स्वेष्टं हृदिस्थं साळुवेश्वरम्(३७)
ये ग्रामघातकाः क्रूराः कपटा दुर्मदा ग्रहाः
तस्कराः शत्रवः कृद्धा वधूसक्ताः पलाशताः(३८)
छद्माचाराः विटा भ्रष्टाः दिवाचर निशाचराः
ते सर्वे पक्षिराजस्य पक्ष्वातवराहताः(३९)
स्त्रीबालसहिताः क्षिप्रं पितृमातृकुलान्विताः
भग्नचित्ता गतस्थाना यान्तु देशान्तरं स्वयम्(४०)
ये तु दुष्टग्रहा यक्षाः पिशाचा देवयोनयः
चतुषष्टिगणा दुष्टाः सप्तत्युन्मत्तका ग्रहाः(४१)
अष्टाशीतिमहाभूताः सप्तकोटिमहाग्रहाः
नवतिज्वरभेदाश्च शतभेदाश्च कृत्रिमाः(४२)
पञ्चाशद्गणनाथाश्च नियुता कृत्रिमा ग्रहाः
प्रेतारूढास्त्रयस्त्रिंशत्पिण्डदानपरायणाः(४३)
अयुताः क्षुद्रभेदाश्च चत्वारिंशच्छिवाह्वयाः
द्वात्रिंशद्वह्निवक्त्राश्च विंशन्मार्जारवक्त्रकाः(४४)
चतुष्षष्ट्याखुरूपाश्च ये चान्ये क्षुद्रयोनयः
ते सर्वे साळुवेशस्य शङ्खनिस्वानमोहिताः(४५)
विषण्णाः स्खलितस्वान्ताः प्राणत्राणापरायणाः
गच्छन्त्वसत्प्रयोक्तारो देशान्तरमनिच्छया(४६)
ये च मूषिकमार्जारशुनका रोगवृश्चिकाः
आशीविषशीतव्याला व्याग्ररुक्षाहिसूकराः(४७)

गृध्राः श्येनाः खगाः काकदंशका भ्रुशका ग्रहा.
एते शरभहस्ताग्रनखक्षतविमोक्षकाः
स्रवद्रक्तच्छटासिक्ताः शिलातलनिताडिताः(४८)
संभिन्नतनवः शीघ्रं नस्यन्त्वखिलदुश्चगाः
न दशन्तुरगाः क्वापि नातिवातोऽपि वातु च(४९)
न दहत्वसक्तो वह्निर्नायान्त्वापोऽपि चाधिकम्
न वर्षत्वतिवृष्टिश्च न पतत्वशनिः क्वचित्(५०)
नाकामत्वपमृत्यश्च नाप्युत्पातभयं क्वचित्
नापमृत्युर्भवेत्कुत्राप्यशुभं न क्वचिद्भवेत्(५१)
न वदन्त्वसहं वाक्यं जन्तवो मम देशिक
नास्तु वैरं च जन्तूनां अन्योन्यं राज्यके मम(५२)
भवन्तु सुखिनः सर्वे सर्वाः सन्तु पतिव्रता
सर्वाः सूयन्तु सत्पुत्रान् पुत्रीश्च शुभलक्षणाः(५३)
सर्वे देवाश्च नन्दन्तु सन्तु कल्याणकारणाः
राजन्वती मही चास्तु राजा भवतु धार्मिकः(५४)
संस्रवन्तु पयो गावः फलन्त्वोषधयोऽधिकम्
भवन्तु फलदा वृक्षाः वृध्दिर्भवतु मेऽखिला(५५)
ममास्तु तरसा नूनमात्मज्ञानमचञ्चलम्
कामक्रोधमहालोभसमदा मोहमत्सराः(५६)
नाक्रामेयुश्च सर्वेश भगवन् करुणानिधे(५७)
गौरीवल्लभ कामारे कालकूटविषाणन
मामुद्वरापदम्भोधेस्त्रिपुरघ्नान्तकान्तक(५८)
साळुवेश जगन्नाथ सर्वभूतहिते रत
त्राहि मां तरसा घोरान्दुष्टान्नाशय नाशय(५९)
कालभैरव विस्वेश विश्वरक्षा परायण
रक्ष मूषिकचोरेभ्यो धान्यराशिं च मे विभो(६०)
पक्षिराज महादेव प्रणतार्तिविनाशन
तस्करेण हृतं वस्तु दूतं दापय दापय(६१)
ये मर्मघातिनः क्षुद्राः छिद्रोपद्रवकारकाः
सर्वाचारपरित्यक्ताः मानहेनाश्च रोघकाः(६२)
ते सर्वे साळुवेशस्य मुसलायुधचूर्णिताः
नश्यन्तु निमिषार्धेन पावकावृततूलवत्(६३)
ये जनद्रोहिणोऽल्पाश्च दुरालोचितभाषिणः(६४)
सत्कर्मविघ्नकर्तारश्चासत्कर्मपरा नरः
ते साळुवेशहस्ताग्रहस्तनिर्भिन्नदेहिनः(६५)
पतन्तु भूतले याम्यां प्राणास्तेषां प्रान्तु वै(६६)
त्वदङ्घ्रिध्याननिर्दरधपापकोशाय मे शिव
मह्यं दूह्यन्ति ये तेषां विभवानि क्षयन्त्वरम्(६७)

त्वदाचापरं भक्तं साधकं मां विवेकिनम्
आक्रामन्ति च सङ्ग्रामे ते गच्छन्तु पराहता:(६८)
एवदीयेनैव मार्गेण चरतां जपतां सदा
ये वदन्ति परीवादं भ्रान्ता: शीघ्रं भवन्तु ते(६९)
त्वद्दासमुख्यं मां धीरं तर्जयन्ति बलाच्च ये
मनसा येऽवमन्यन्ते तत्स्वान्तं भ्रमतु क्षणात्(७०)
मनसा कर्मणा वाचा ये कुर्वन्त्यतिदु:सहम्
ते महाशोकरोहाब्धौ पतन्त्वाशु शिवाज्ञया(७१)
मदियानि पदार्थानि ग्रहीतुं योऽवलोकते
तत्क्षणादेव नष्टाक्षो भवत्वाशु शिवाज्ञया(७२)
मदीयद्रव्यमादाय ये गच्छन्ति हि तस्करा:
सिम्हारिपाशसंबन्धात् ते चरेन्तु प्रदक्षिणम्(७३)
सीमान्तर गताश्चोरा गृहीतद्रव्यसञ्जया:
अवशावयवास्ते च गच्छन्तु शरभाज्ञया(७४)
तस्करा येऽपगृह्णन्ति मम धान्यधनादिकम्
पक्षिराट्क्रोडिकाकृष्टाः समागस्छन्तु ते दृतम्(७५)
समाहृतपदार्थाह्या देशतीताश्च तस्करा:
शरभेशहलाकृष्टास्त आगच्छन्तु सत्वरम्(७६)
शान्तं विवेकिनं भक्तं त्वदङ्घ्रिध्यानतत्परम्
दृह्यन्ति य इह प्राणास्तेषां यान्तु यमं शिव(७७)
षट्त्रिंशत्कोष्टके यन्त्रे रेखाशूलादिसाध्यके
स्वेच्छामन्त्रं लिखित्वा तु जपेदाराध्य साधक:(७८)
उदङ्मुखः सहस्रं तु रक्षणाय जपेन्निशि
नष्टाहरणके पञ्चरात्रं पश्चिमदिङ्मुख:(७९)
मरणे सप्तरात्रं तु दक्षिणभिमुखां जपेत्
रोगनिग्रहणे चाष्टरात्रमाग्नेयदिङ्मुख:(८०)
इति गुह्यं महामन्त्रं परमं सर्विसिध्दिदम्
शरभेणाख्यकवचं चतुर्वर्गफलप्रदम्(८१)
प्रत्यहं प्रतिपक्षं वा प्रतिमासमथापि वा
यो जपेत् प्रतिवर्षं वा वरेण्य स शिवो भवेत्।।(८२)
एवं हि जपत: पुंस: पातकं चोपपातकम्
तत्सर्वं लयमाप्नोति रविणा तिमिरं यथा।।(८३)
दशाब्दं यो जपेन्नित्यं प्रातरुत्थाय साधक:
सर्वसिध्दिं समाश्रित्य देहान्ते स शिवो भवेत् ।।(८४)
त्रिकालं ध्यानपूर्वं तु जपेद् द्वादशवार्षिकम्
स देवि कायेनानेन जीवन्मुक्तो भवेच्छिवे।।(८५)
शतवारं जपेन्नित्यं मण्डलं यो वरानने
सोऽणिमादिगुणान् प्राप्य विचरेत्स्वेच्छया सदा।।(८६)

अतलादिधरण्यन्तभुवनेषु तथोपरि
विचरेत्कामगः सर्वैः पूज्यमानो यथासुखम्॥(८७)
त्रिमासं यो जपेन्नित्यमष्टोत्तरसहस्रकम्
सहसा शरभेशस्य सारूप्यं लभतेऽम्बिके॥(८८)
षण्मासं यो जपेदेवं प्रयतस्तु दृढव्रतः
मद्रूपधारकैर्मर्त्यैः सहसिद्धिप्रदायकैः॥(८९)
मम लोके तु संपूज्यो विष्णुलोके तथैव च
ब्रह्मलोके च रमते सर्वत्र न निवार्यते॥(९०)
इन्द्राग्नियमरक्षेश जलेशपवनैः सदा
सोमेशानकलक्ष्मीशैर्दिशां पालैः स पूज्यते॥(९१)
आदित्यसोमपृथ्वीजबुधश्रीगुरुभार्गवैः
पूज्यते स ग्रहैः सर्वः शनिना राहुकेतुभिः॥(९२)
भृग्वङ्गीरःपुलस्त्यैश्च पुलहादिमरीचिभिः
दक्षकास्यपक्रत्वब्जयोनिभिः स च पूज्यते॥(९३)
भैरवैर्वसुभी रुद्रैरादित्यैर्वालखिल्यकैः
दिग्गजैश्च महानागैर्दिव्यास्त्रैर्दिव्यवाहनैः॥(९४)
मोहेश्वरैर्महारत्नैः कामधेनुसुरद्रुमैः
सरिद्भिः सागरैः शैलैर्देवताभिस्तपोधनैः॥(९५)
दानवै राक्षसैः क्रूरैः सिद्धगन्धर्वैकिन्नरैः
यक्षविद्याधरैर्नागैरप्सरोभिः स पूज्यते॥(९६)
अपस्मारग्रहैर्भीमैरुन्मत्तैर्ब्रह्मराक्षसैः
वेतालैः खेचरैः क्रूरैः कूश्माण्डै राक्षसग्रहैः॥(९७)
ज्वालवक्त्रैस्तमोरूपैः स्त्रीग्रहैः पापविक्रमैः
भूतप्रेतपिशाचाद्यैर्ग्रहैः सर्वैः स पुज्यते॥(९८)
ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैचन्यैश्च मानवैः
पशुपक्षिमृगव्यालै. पूज्यते सर्वजन्तुभिः॥(९९)
किमत्र बहुना देवि तव वक्षये यथातथम्
मया च विष्णुना चैव विश्वकर्त्रा च पाल्यते॥(१००)
भवत्या च गिरा लक्ष्म्या ब्रह्माण्याद्यष्टमातृभिः
गणेश्वरादियोगीन्द्रैत्योगिनीभिश्च पाल्यते॥(१०१)
य इदं प्रजपेद्भक्त्या चासाध्यं नैव विद्यते
कवचेन्द्रं महामन्त्रं जपेतस्मादनुत्तमम्॥(१०२)
उच्चाडने मरुद्वक्त्रो विद्वेषे राक्षसाननः
प्रागाननोऽभिवृद्धौ च सर्वेश्वीशानदिङ्मुखः(१०३)
यो जपेत्कवचं नित्यं त्रिकालं ध्यानपूर्वकम्
सर्वसिध्दिमवाप्नोति सहसा साधकोत्तम्ः॥(१०४)

देव देव महादेव शिव कारुण्यवारिधे
पाहि मां प्रणतं स्वामिन् प्रसीद प्रसिद सततं मम।।(१०५)
यत्कृत्यं तन्नकृतं यदकृत्यं कृत्यवदाचरितम्।
उभयो: प्राय्श्चित्तं शिव तव नामाक्षरद्वितयम्।।(१०७)

ओं नमो भगवते श्री शिवाय मम पुरत ज्वल ज्वल प्रज्वल प्रज्वल
साध्यं साधय साधय सर्व दुष्टेभ्यो: हुं फट् स्वाहा
श्री शिव: पुरत: पातु.
(थे अबोवे मूल मन्त्रम् शौल्द् बे चन्तेद् अलोन्ग् विथ् एअच् कवच मन्त्रम् इन्दिचतेद् अबोदे).

# देसिक स्तोत्रं

अत देवि महागुह्यं श्रुणु सर्वार्त्त सादकं।
शान्तिकं देसिकं स्तोत्रं सारभूतं ददामि ते॥
देसिक स्तोत्र मन्त्रस्य
परब्रह्म रुषिः देविगायत्रि छन्तः देसिकः देवता
औं बीजं श्रीं कीलकं श्री देसिक प्रसादार्त्थे सिद्ध्यर्थे जपे विनियोग.
श्रां इत्याति कर षडङ्गन्यासं (अथवा ह्रां ह्रूं......एवं)

**ध्यानं**
शान्तं सर्वमयं प्रसन्नवदनं सर्वोत्तरं साश्वतं।
सत्यं निश्चलमव्ययं विभुमजं तुर्यं चिदंचं वरं॥
एकं निर्मलमिन्दु पीडनिलयं ह्रींकार गंयं शिवं।
कार्यं निर्मल मप्रमेयं अकलं वन्दे अनिशं देशिकं॥

समस्त भुवनेशाय सच्चिदानंद तेजसे
नमः शरभरूपाय गुरवे करुणानिधे॥(१)
अनात्यायखिलात्याय मायिने कदमायिने
अरूपाय स्वरूपाय शिवाय गुरवे नमः॥(२)
सालुवाय महेशाय सर्वजीव निवासिने
त्रयवस्थातीत कालाय शिवाय गुरवे नमः(३)
विभवे पक्षिराजाय प्रह्मणे गणनात्मने
प्रकाशानन्द रूपाय शिवाय गुरवे नमः(४)
वेदवेद्यान्न वेद्याय योगिने प्रह्मवर्च्चसे
सदसद्दृश्य भावाय शिवाय गुरवे नमः(५)
संसार वार्त्दि बोधाय शम्भवे मृत्युंमृत्यवे
परात्परतरेशाय शिवाय गुरवे नमः॥(६)
षट्कोश मध्य संस्थाय सर्वकारण मूर्त्तये
कारणातीत पीठाय शिवाय गुरवे नमः॥(७)
प्रणवार्त्त प्रबोधाय प्रपञ्चातीत तेजसे
शब्द ब्रह्म स्वरूपाय शिवाय गुरवे नमः॥(८)
अङ्यान तिमिरान्तस्य ङ्नानञ्जनचलागया
चक्षुरुन्मीलितं येन तस्मै श्री गुरवे नमः॥(९)
अङ्यान पाच संबद्ध तिमिरावृत मानसः
कृपया विच्चासितो यस्य तस्मै श्री गुरवे नमः॥(१०)

देसकाल स्थलं व्याज संव्रुत संवुतद्वान्तमात्मनां
येनामलीकृतं सत्य: तस्मै श्री गुरवे नम:।।(११)
अखण्ड मण्डलाकारं व्याप्तं येन चराचरं
तत्पदं दर्शितं येन तस्मै श्री गुरवे नम:।।(१२)
गुरुर ब्रह्मा गुरुर् विष्णु गुरुर्देवो महेश्वर:
गुरुरेव परं ब्रह्म तस्मै श्री गुरवे नम:।।(१३)
सर्ग स्तिति लयातीनां आतिकर्त्तारमीश्वरं
नमामि शिरसादेवि देसिकं शरभेश्ब्वरं।।(१४)
नमामि सोमसूर्याग्नि रूपिणं दिव्य तेजसं
ज्ञानतं जीवलोकानां गुरुनाथं परात्परं।।(१५)
भैरवाय तमस्तुभ्यं नमस्ते बटवाग्नये
नमो अस्तु दुर्गा देव्यै च भद्रकाळ्यै नमोनम:।।(१६)
नमस्ते लोकफालाय सहस्राक्षाय वह्नये
यमाय राक्षसेशाय वरुणाय पवस्वते।।(१७)
किन्नरेन्द्राय रुद्राय व्याधये मृत्यवे नम:
कामाय रक्त छामुण्ड्यै मोहिन्यै च नमो नम:।।(१८)
द्राविण्यै च नम: शब्दाकर्षिण्यै च गिरे नम:
नमो रमायै मायायै पुलिन्तिन्यै नमो नम:।।(१९)
महासास्ताय क्षोभिण्यै ज्येष्टादेव्यै नमो नम:
ब्रह्मणे च पराशक्त्यै नमो नारायणाय नम:।।(२०)
मायायै घोणिने वाण्यै वेधसे वटुकाय च
अश्विनीभ्यां नमो वीरभद्राय च नमो नम:।।(२१)
भाषायै दक्षिणामूर्त्यै कात्यायन्यै नमो नम:
नमस्ते घोररूपाय कालरुद्राय ते नम:।।(२२)
गणेश्वराय कालाय पार्वती नन्दनाय च
भैरवाय नमस्तुभ्यं त्वरितायै नमो नम:।।(२३)
निर्वाण वीरभद्राय वटवानल शंबवे
नमोअस्तु वीरमायायै ब्रह्माण्यै च नमो नम:।।(२४)
माहेश्वर्यै च कौमार्यै वैष्णव्यै च नमो नम:
नम: सूकरमुख्यै च सिंहमुख्यै नमो नम:।।(२५)
इन्द्राण्यै चण्डिकायै च मरीच्यै कश्यपाय च
नमो अस्तु भागीरत्यै च नमो विघ्नेश्वराय च।।(२६)
ईशानाय कृतान्ताय भद्रकाळ्यै नमो नम:
हूं काळ्यै जातवेदाग्नि दुर्गा देव्यै नमो नम:।।(२७)
अर्ध नारी च रूपाय नमस्ते परमात्मने
श्वेद भूयै च सोमाय नम: शुक्राय विष्णवे।।(२८)
नमोअस्तु बलभद्राय कुबेराय नमो नम:
परात्परायै दुर्गायै धर्माय परशंभवे।।(२९)

नमो अग्नये भैरवाय च अस्विन्यै भार्गवायच
नायकाय नमस्ते अस्तु वायवे पावकाय च।।(३०)
इन्द्राय जलनाथाय रुद्रैकादश मूर्त्तये
द्वादशाधित्य रूपाय भारत्यै ताण्डवाय च।।(३१)
श्यामभूंयै न्रुसिंहाय भूयो भूयो नमाम्यहं
नमः शरभ साळुव पक्षिराजाय शंभवे।।(३२)
ज्ञानमुद्रा स्वरूपाय गुरवे करुणानिधे
देसिकाय नमः सर्व सिद्दै सर्वान्तरात्मने।।(३३)
विन्दुनात स्वरूपाय ब्रह्मणे अनन्तसक्तये
नमो स्वरूपाय जगन्मयाय जगन्निवासाय हिरणमयाय(३४)
भूतावसानाय पुरादनाय नवाय नादाय नमो नमस्ते(३५)
त्वमेव माताच पिता त्वमेव त्वमेव बन्धुच्च गुरुस्त्वमेव
त्वमेव विध्या द्राविणं त्वमेव त्वमेव सर्वं मम देव देव।।(३६)
सुमतिरखिल विद्या कन्तली कन्त कन्तं
दिवसमनु निवस्यन् चन्द्रपीटे स्वनातं।।(३७)
उषसि शरभ पूजा सन्निधानं विधाय
जपतु सकल सिद्दै देसिक स्तोत्रमन्त्रं।।(३९)
यो जपेत् प्रद्यहं तस्य सुप्रसन्नो भवेत् गुरुः
स्वात्मज्ञानं च लभते सर्वशत्रु जयं तता।।
मन्त्राणां सिद्धि भेदं च भोग भोग्यं जयं तता]
आयुरारोग्य वृद्धिं च सर्व सौख्यं लभेत् ध्रुवम्।।

**इति श्री आकाश भैरवकल्पे प्रत्क्ष सिद्धि प्रदे उमा महेश्वर सम्वादे देसिक स्तोत्रं नाम सप्त पञ्चाशोद्याय:**

# शरभ भुजंग प्रयाद स्तोत्रं

श्री शिव उवाच।।

नमो विघ्नराजाय वागीश्वराय शिवाय विरञ्चाय नारायणाय।
नमच्चन्द्र चूडाय नादाय तुभ्यं प्रसीद प्रसीद प्रसीदार्त्तिनो मे।। (१)
कुटार त्रिशूलाभि भाणास्यभीतीन् मृगब्जाग्नि घण्डा दनुच्चर्मतानि
कराब्जै वहंतं निरन्तं हर त्वां गदा नाद पश्यांयहं साळुवेशं।।(२)
लसद्वास वर्णार्क वेदास्र मध्ये जपा सन्निभे हंसपीडे निषण्णं
जयन्तं छितानन्द कन्दं प्रसन्नं जगत्कारणं त्वां नमस्यामि शंभो।।(३)
षड्से अंबुजे वादि लान्तार्ण युक्ते स्पुरच्छञ्जलाह्वे वसन्तं भवं त्वां
कृपापूर पूर्णेक्षणं त्याभिनाहं प्रहृष्टोस्मि ह्रुष्टोस्मि पुष्टोस्मि शंभो।।(४)
दसारे अंबुजे दिव्यरत्न प्रभाड्ये महाहंसपीठे समासीनमाद्य
जगत्राण दक्षं चिदात्मानमेगं शिवं त्वा विना अहं न मन्ये अन्यदैवं।।(५)
हृदि द्वादसारे हिरण्य प्रभे अब्जे विराजं महाहंस पीटे प्रदिष्टं
गुणोपेतमीशं कनत्कादिष्टांते परं शाळुवेचं शरण्यं प्रबद्ये।।(६)
विसुद्धांबुजे शोडशारे कलाढ्ये निबत्तासनं जीवनादं वरेण्यं
क्षपाराज छूडं वराभीति हस्तं पुराणं भजांयश्रुतं साळुवेशं।।(७)
ललाटे हलक्षे दलद्वन्द्वपत्रे ज्वलन्मौक्तिकाभे सुहंसासनस्तं
परीतेश सोमाग्नि नेत्रं पवित्रं परं शंभुपीटे पराशक्ति मित्रं।।(८)
चतुःषट्दश द्वादशाशास्त्र युग्मान्यतीताष्टपत्रे लिकार्णवृते अब्जे
नमो वाग्भवानी विसर्गान्तरस्थं नमः साळुवेशं परं मातृकाख्यं।।(९)
चतुर्मातृका पंचपंचाशदर्ण प्रपूर्णे सहस्रच्छदे स्फाटिकाभ्जे
प्रणौमि ध्रुवस्थं जगद्साक्षिभूतं प्रकाश प्रपञ्ज प्रबोध स्वरूपं।।(१०)
नमो दुर्गया भद्रकाळ्या च शश्वत् सदा सेव्यमानं दयासिन्धु राजं
प्रसन्नं सुभाक्षं शिवं तत्वरूपं परं साळुवेशं नमः पक्षिराजं।(११)
नमस्त्वालिकाक्षं भयद्राणदक्षं चिदभस्मनोत् धूलिताशेष कायं
महानागभूषं महेशं गिरिशं मतीयं सदानन्दयत्वाति शंभो।।(१२)
महीनीरसुक्रानिल व्योम सोमा हरीचरत्ममूर्त्यष्ट भेद स्वरूपं
प्रसीतेति रक्षेति वक्तुं भवन्तं वयं के जगन्नाध शम्बो प्रसिद।।(१३)
सहस्ररेष्टकास्रे द्विपत्रे स्वराब्जे लसद् द्वादशारे दशरे
चतुष्पत्र मध्ये च मिश्रासनस्तं जगद्रूपिणं नौमि संवित्स्वरूपं।।(१४)

समत्यात्म पूर्वदि दैवाधि भूतं परं पुरुषं योगिनो यं यजन्ति
तमाद्यंत शून्यं जगत्फालयंतं महायोग शीलं सदाहं भजामि॥(१५)
निवृत्तिः प्रदिष्टाच विद्येति शान्तिः ततो अतीत शान्तिः कलेति स्वसक्तिं
विपञ्च्य प्रपञ्च परिभ्राजयन्तं नमः शाळुवेसं भजेत्वाखिलेशं}}(१६)
यदा पुत्र मित्रानुज भ्रातृवर्गं पिता सद्म माता धनं धान्यजालं
तनुक्ष्मा च पत्नीति सर्वं कृपालो जहत्यासु मां त्वं त्वमेच प्रसित॥(१७)
भव त्राण नाशं पिता सुप्रसादन्यनुष्भूतमीहं तमात्म प्रभावैः
शिव त्वाकिलाधारमूर्त्ते दयाब्धे अनिसं भावये अहं हृद भोजमध्ये॥(१८)
नमः कालकालाय रुद्राय तुभ्यं नमः पक्षिराजाय देवेश्वराय
नमः शाळुवेसाय घोराय तुभ्यं नमो मुण्डमालाय चर्मांबराय॥(१९)
इति स्तोत्रमेतद् भुजङ्ग प्रयादं जयन्तं पटन्तं परकायंतमीशं
समस्तापदं प्राक् समुधृद्त्य हस्तैःपुरस्तास्शिवत्वं ददात्येव सत्यं(२०)
इति आकाश भैरवकल्पे प्रत्यक्ष सिद्धिप्रदे उमा महेश्वर संवादे साळुवेश
भुजङ्ग प्रयाद स्तोत्रं नाम सप्त सप्तती तमो अध्यायः

# शरभ हृदयं

**श्रीदेव्युवाच॥**
भगवन्देवदेवेश सर्वशास्त्रार्थवादक
ब्रूहिमे सर्वपापघ्नं किं मन्त्रमिष्टकामदं॥(१)
केन पुण्यप्रभावेन शतॄणां प्राणनाशनम्
सर्वपापशमनं धन्यमायुष्यवर्धनम्
भ्रूहि मे कृपया शम्भो त्वत्पादहकमलं नमः॥(२)

**ईश्वर उवाच॥**
श्रुणु वक्ष्यामि देवेशि सर्पापहरं परम्॥(३)
सर्वशत्रूहर दिव्यं हृदयं शरभस्य च
साळुवं सर्वरोगघ्नं हृदयं परमाद्भुतम्॥(४)
गुह्याद्गुह्यतरं गुह्यं गोपनीयं प्रयत्नतः
पुरा नारायणः श्रीमान् क्षीराब्धौ मथनं ततः॥(५)
तस्य प्रारम्भसमये हृदयम् शरभस्य च
प्रातः कालेऽजपन्नित्यं विशदावर्तिकं मुदा॥(६)
एवं मासत्रयं कृत्वा प्रदुर्बभूव साळुवः
तस्य सोदंडवद्भूमौ प्रणम्य च पुनः पुनः॥(७)
तमुत्थाप्य महातेजा मूर्घ्न्यु प्राघ्राय साळुवः
संतुष्टः प्रयुवाचेदं निर्विघ्नेनामृतं भवेत्॥(८)
इत्युक्त्वा प्रददौ तस्मै रक्षणं सर्वविस्वकम्
ततो नारायणो देवःप्रणमानोऽब्रवीद्वचः॥(९)

**नारायण उवाच॥**
देव देव महादेव पक्षिराज महाप्रभो
हृदयम् तव देवेश तस्य को वा रुषिर्वद॥(१०)
**श्री शरबेश्वर उवाच॥**
छंदः किं बीजशक्ति च किं फलं वद मे प्रभो
श्रुणु वक्ष्यामहम् विष्णो ह्रुदयं मम साळुवम्॥(११)
सर्वापापक्षयं पुण्यं सर्वशतृविनाशनम्
सर्वक्लेशविनाशं शांतं सर्वसंतोषकारणम्॥(१२)
सर्वसौभाग्यतं शान्तं सर्वमंगलवर्धनम्
कालग्निरुद्र रुषिः
जगति छंदः
शरभेश्वरो देवता (१३)
खं भीजं, स्वाहा शक्तिः ,नमः कीलकं, मम इष्टार्त्त सिद्धये पाठे विनियोगः
**(मूल मन्त्र न्यासम् करेत्)** (१४)

प्रथमं पक्षिराजं च द्वितेयं शरभं तथा (१५)
तृतीयं साळुवं प्रोक्तं चतुर्थं लोकनायकम्
पंचमं रेणुकानाथं षष्टं काळाग्निरुद्रकम्।।(१६)
सप्तमं नारसिम्हारिमष्टमं विश्वमोहनम्
श्रीं ह्रीं क्लीं नवमं चैव हुं हुं हुं दशमं तथा।।(१७)
क्लीं ह्रीं क्लामेकादशं च द्वादशं सर्वमंत्रवित्
त्रयोदशं तु यंत्रेशं चतुर्दशं महाबलः।।(१८)
पंचदशम् पापनाशं षोडशं च करालकम्
सप्तदशम् महारौद्रं भीममष्टदशं तथा।।(१९)
एकोनविंशम् सांबं च विंशम् च शंकरं तथा
विंशोत्तरैकं सर्वेशं द्वाविंशं पार्वतीपतिम्।।(२०)
त्रयोविंशं च ह्लूं ह्लूं ह्लूं चतुर्विंशमनन्तकम्
पंचविंशं वृषारूडं षड्विंशं विश्वलोचनम्।।(२१)
त्रिलोचनं सप्तविंशमष्टाविंशं खगेन्द्रकम्
पं पं पं नवविंशं च त्रिंशं बुजगभूषणम्।।(२२)
एकत्रिंशं च लं लं लं द्वात्रिंशं पंचवक्त्रकम्
त्रयत्रिंशम् च आनंदं चतुत्रिंशम् परात्परम्।।(२३)
पंचत्रिंशं च भं भं भं षट्त्रिंशं शत्रुनाशनम्
सप्तत्रिंशं स्वयंभूजं विभमष्टत्रिगुंठितम्।।(२४)
शूलपाणिं नवत्रिंशं चत्वारिंशं कलाधरम्
एकचत्वारिंशं सं सं (सं) द्विचत्वारिंशं हंसकम्।।(२५)
ततद् हृदयमायुष्यं मंत्रं सर्वार्थसाधकम्
अनेकरत्नलंवानी जटामुकुटधारिणम्।।(२६)
अनेकरत्नसंयुक्तं सुवर्णार्चितमौलिनम्
तक्षकादि महानाग कुंडलद्वय शोभितम्।।(२७)
त्रि पंचनयनं पंचवक्त्रतुंडधरं प्रभुम्
करालं भ्रूकुटीभोमं शम्खतुल्य कपोलकम्।।(२८)
कालिकलित दुर्गा च पक्षद्वय विराजितम्
दशायुधधरं दीप्तं दशबाहुं त्रिलोचनं।।(२९)
नीलकण्ठधरं भोगसर्पहारोपशोभितम्
विशालवक्षः विश्वेशं विस्वमोहनमव्ययम्।।(३०)
त्रिपुरारिं त्रिशुलादिधारिणं मृगधारणम्
व्याघ्रचर्माम्बरधरं वाडवाग्निस्थितोदरम्।।(३१)
मृत्यु व्याधिशितोरुं च वज्रजानुप्रदेशकम्
पादपंकजयुग्मं च तीक्षणवज्र नखाग्रकम्।।(३२)
भणि नूपुर मंजीरभणत्किंकिणि जंधकम्
वज्रतुण्ड महादीप्तं कालकालं क्रुपानिधिम्।।(३३)

एवम् ध्यात्वा च हृदयम् त्रिंशदावृत्तिकं क्रमात्
नित्यं जप्त्वा साळुवेशम् हृदयं सर्वकामदम्।।(३४)
सर्वपुण्यफलश्रेष्टं सर्वशत्रुविनाशनम्
सर्वरोगहरं दिव्यम् भजतां पापनाशनम्।।(३५)
इहैव सकलान्भोगानंते शिवपदम् व्रजेत्
इत्युक्त्वान्तर्दधे देवः शरभः पक्षिराजकः।।(३६)
ततो नारायणो ध्यात्वा श्रुत्वा रूपं च विस्मितः
एतत्ते कथितं देवि हृदयम् शरभस्य च
पठतां श्रुण्वतां चैव सर्वमंत्रार्थसिध्दिदम्(३७)

इति श्रीआकाशभैरवकल्पे प्रत्यक्षसिद्दिप्रदे उमामहेश्वरसम्वादे
शरभहृदयम् नामाष्टसप्ततितमोऽध्यायः ।।(३८)

# शरभ मन्त्र राजः

अमृतानन्द नाथाय कृष्णानन्द योगिने।
विमलानन्दनाथाय शिवाय गुरवे नमः।।

ओं आं ह्रीं क्रों ऐहि ऐहि शरभ साळुवाय स्फुर स्फुर पक्षिराजाय प्रस्फुर प्रस्फुर शत्रूणां शोणितं पिब पिब ओं ऐ ग्लौ ग्लौं ओं ह्रीं ह्रीं ह्रीं ओं ऐं ग्लौं ग्लौं ग्लौं ग्लौं ग्लौं आवेशय आवेशय आगश्च आगश्च स्थिरोभव स्थिरोभव रोगान् नाशय नाशय कृत्तिमान् खाहि खाहि चटकान् खादय खादय ओं ह्रीं क्ष्रीं क्रों (अमुकस्य) रोगान् सुशीघ्रेण छेदय छेदय खेदय खेदय खड्गेन छेदय खेदय आं पाशेन बन्धय बन्धय ह्रीं वं आरोग्यं कुरु कुरु रं खें चत्रूणां रक्तं पिब पिब शीघ्रं शीघ्रं कृत्रिमान् खादय खादय ओं ह्रीं ग्रौं धें खां खं फट् प्राणग्रहासि प्राणग्रहासि हुं फट् सर्वचत्रु सम्हारणाय शरभ साळुवाय पक्षिराजाय हुं फट् स्वाहा – ओं नमो भगवते अष्टपादाय सहस्रभाहवे द्विसीर्षाय द्विनेत्राय द्विपक्षाय रुद्ररूपाय रौद्र मृग विहङ्ख वेषधारिणे योग नृसिम्ह वेष सम्हारणाय उत्तण्डखण्ढणाय ज्वाला नृसिम्ह हताय समनाय लक्ष्मी नृसिम्ह मदनकराय जगन् नृसिम्ह सुदर्शनाय अनेक विघ्नरूप छेदनाय अखिल देवता वन्दनाय निखिलदेवता परिपालनाय क्षय रोगादि सकल रोग निवारणाय ह्रों ह्रीं महा चित्र रथादि गन्धर्व प्रदिष्टिताय अन्तरीक्षग्रह आकाश ग्रह वसुन्धराग्रह क्षिप्रग्रह मन्त्र ग्रह यक्षग्रह कामिनी ग्रह मोहिनी ग्रह उच्छाठनाय सकल ब्रह्म राक्षस वेदाळ कूष्माण्डादि महा प्रबल ग्रहोच्छाटनाय सकल दुष्ट ग्रह निवारणाय महावीरभद्राय परमन्त्र परयन्त्र परतन्त्रादिकानां मूल छेदनाय शिष्य परिपालनाय महापशु रूपिणे शरभ साळुवाय पक्षिराजाय हुं फट् स्वाहा।।
इति कालभैरवकृद शरभ मन्त्र राजः।।

# श्री शरभ माला मन्त्रं

(मेरु तन्त्रोक्तं)

श्री शिव उवाच

माला मंत्रं प्रवक्ष्यामि रहस्यं श्रुणु शोभने
मंत्रं स्मरण मात्रेणा करस्थाः सर्वसिद्धयः

ओं नमो भगवते शलभाय साल्वाय सर्वभुतोच्छाडनाय ग्रह राक्षस निवारणाय ज्वालामाला स्वरूपाय दक्ष निष्काशनाय साक्षात् कालरूप स्वरूपाय अष्टमूर्त्तये कृचानुरेतसे महाक्रूर भूतोच्छाडनाय प्रदिशयनाय शत्रून् नाशय नाशय शत्रु पशून् ग्रुण्ह ग्रुण्ह खादय खादय ओं हुं फट्॥

**(सर्व भूत, ज्वर चातुर्त्तिकं – पात्रे जलं निदाय सप्तवारं अबिमन्त्रैय)**
इति श्री महा माया महाकालानुमते मेरुतन्त्रे शिवप्रणीते सरभ माला मन्त्रं.

# निग्रह दारुण सप्तकं

अस्य श्री निग्रह दारुण सप्तक स्तोत्रस्य
वासुदेवः ऋषिः स्रग्धरा छंदः श्री शरभेश्वरो देवता
तत् प्रसाद सिद्ध्यर्त्ते सर्व शत्रु नाशने विनियोगः
हरिः ओं।।
कोपेन्द्रेकातितिर्यक् पटल चरिचरत्तारवर्णप्रभूत
ज्वालामालाग्रदग्धस्मरतनुशकलं त्वामहं सालुवेश
यावे त्वत्पादपद्मप्रणतिभिरनिशं वेष्टि मां यः क्रियाभि–
स्तस्य प्राणप्रयाणं परशिव भवतः शूलभिन्नस्य तूर्णम्

शम्भो त्वत् हस्तकुन्तक्षत रिपुहृदयाग्निःस्रवल्लोहिदौघं
पीत्वा पीत्वा अतिदर्पाद्दिशि दिशि विचरत् त्वद् गणाश्चण्डमुख्याः
गर्जन्तु क्षिप्रवेगं निखिल जयकराः खेललीलाः सलीलाः
संत्रस्ता ब्रह्मदेवाः शरब खगपते त्राहि नः सालुवेशः।।(२)

सर्वाद्यं सर्वनिष्टं सकलभयकरं तत्वरूपं शरण्यं
याचे अहं त्याममोघं परिकरमिहतेद्वेष्टये तस्य यो मां
श्री शंभो त्वत् कराब्जस्थित हल कटिणाधातवक्षः स्तलस्य
प्राणाः प्रेतेशदूत ग्रहण पर्खाः क्रोध पूर्वं प्रयान्तु।।(३)

द्विष्मः क्षोण्यां वयं यं तवपदयुगल ध्याननिर्दग्धपापाः
कृत्या कृत्यै विमुक्ता विहग कुलपते खेलया बद्ध मूर्ते
तूर्णं त्वत्पाद पद्म प्रधृत परशुना तुण्ड खंडी कृतांगः
सद्द्वेषी यातु यांयं पुरं अदिकलुषः काल पाशाग्र बद्धः।।(४)

भीम श्री सालुवेश प्रणत भयहर प्राणि जित् दुर्मदानां
या ते पंचास्य गर्वं प्रशमनविहितः ते स्वेछया बद्धमूर्ते
त्वामेवाशु त्वङ्घ्रयष्टक नख विलुटदुग्रीव जिह्वोतरस्य
प्राणोत्क्राम प्रमाद प्रफुटित हृदयस्यायुरव्यायाहतेश।।(५)

श्री शूलिन्ते भुजाग्रस्तित दृट मुसलावर्त वाताभिधातैर्
याता यातारियूथत्वरितविघटनो भूतरक्तच्छटार्द्राम्
तां वृष्ट्वाऽऽयो धनेज्यामखिलसुरगणाश्चाशु नंदंतु भूता
नाना वेतालपूगः पिबतु तदखिलं प्रीतचित्तः प्रमत्तः।।(६)

त्वद् दोर्दण्डाग्रमुण्ड प्रकटित विनमच्चंड कोदण्ड मुक्तै
बाणैः दिव्यै अनेकैः शिदिलित वपुषःक्षीण कोलाहलस्य
तस्य प्राणा वसानं शरभ रिपु रिगोऽहंत्वदाज्या प्रभावै
स्तूर्णं पश्यामि यो मां परिहसति सबास्वादि मध्यांतहेतो॥(७)

इति निशि प्रयस्तु निराशनो यमबुखः शिवभावमनुस्मरन्
दशदिन प्रतिवार शतद्वयं जपतु निग्रह दारुण सप्तकम्

In the night with a firm conviction that the devotee is Lord Shiva Himself, standing and facing , South, daily for 10 days chant 200 times. Chanting each sloka joined with Mula Mantra ensures annihilation of enemy.

If joined with the following and chanted the results are given against each:

| | |
|---|---|
| Sarabha's name | Good health |
| Gowri vallabha name | Removal of all illness |
| Saluvesa name | Destruction of thieves, and self protection |
| Kalabhairava name | Protection to cereals, paddy etc |
| Pakshiraja mantra | Protection to food |
| Sarvagna mantra | Income |
| Raktha Chamundry mantra | Fulfillment of desire |
| Mohini mantra | Attraction |
| Sastha mantra | Getting progeny (son) |
| Nrusimha or Veerabhadra mantra | Ucchadanam |
| Vadavanala mantra | Destruction of enemies |
| Chamundi mantra | Anihilation of all enemies |

# माया

अस्य श्री माया मन्त्रस्य
परब्रह्म ऋषिः त्रिष्टुप् छन्दः पराशक्ति देवता
माया प्रयोग। सिद्ध्यर्थे जपे विनियोगः
हां, हीं, हूं, हैं, हौं, हः – अंगन्यास/करन्यास कुर्यात्
ध्यानं
ताबिश्च नीलां सर चाप हस्तां सर्वाधिकां श्याम रदाधिरूढां
नमामि रुद्रा वसनेन लोकान् सर्वान् सलोकामपि मोहयन्तीं।।
लं इत्यादि पञ्चोपचारैः

ओं हीं भूः हीं भुवः हीं स्वः हीं शिवाङ्घ्रियुग्मे विनिविष्टचित्तम् सर्वेषां तुष्टयो हृदयस्य बालं रिपूणां निद्रां विवचय् करोति महामाये मां परिरक्ष नित्यं।।

हीं स्वः हीं भुवः हीं भूः हीं ओं स्वाहा

(त्रिकोणं, वृत्तं, चतुर्दश दळं, भूपुरं)

# भद्र काळि

अस्य श्री भद्रकाळि महा मंत्रस्य
सद्यो जात: रुषि: जगती छन्द: भद्रकाळि देवता
ह्रीं भीजं स्वाहा सक्ति:

मोक्षार्थे विनियोग:
हां, ह्रीं, हूं, हैं ह्रौं ह: इत्याति कर षडङ्ग न्यासं
ध्यानं
नीलाभा हेम वस्त्रा नररुधिर वसा मांस निर्भिष्य वक्त्रा
चूलं कुन्दं रथाङ्गं फणि मुसल गदा तोमरं पट्टिसं च
पाशं चक्तिं च सङ्खं द्वज हल दहनं वज्रखेडं कराब्जै:
बिभ्राणा बीमवेशा विजयतु भुवने विद्रुता भद्रकाळि।।

ह्रीं मोचय ओं काळि गं काळि मह्यं सदा त्वं कल्याणि मनोहरि इह कवितां
सौभाग्य हव्या हतं देहि अस्मिन् परमन्त्र हारिणि सुभे तत् यन्त्र हारिणि अहो
विद्याच्छेतिनि ह्रीं जगत् क्षोभिणि

# शूलिनि

शूलिनि दुर्गा महामन्त्रस्य
प्रह्मा रुषि: गायत्रि छन्द: शूलिनी देवत।
दुं बीजं स्वाहा शक्ति:
स्वेच्छा प्रयोग सिद्ध्यर्थे जपे विनियोग:
ह्रामित्यादिना कर षडङ्ग न्यासं

ओं श्रीं शूलिनि दुर्गे देव सिद्ध सुपूजिते नन्दिनि मां रक्ष रक्ष महायोगीश्वरी हुं फट् हृदयाय नम:
श्रीं शूलिनि वरदे देवसिद्ध सुपूजिते हुं फट् स्वाहा – शिरसे स्वाहा
श्रीं शूलिनि युद्ध प्रिये देवसिद्ध सुपूजिते हुं फट् स्वाहा – सिखायै वषट्
ओं श्रीं शूलिनि विन्ध्य वासिनि मां त्रायय त्रावय देवसिद्ध सुपूजिते हुं फट् स्वाहा – कवचाय हुं
ओं श्रीं शूलिनि महिषासुरमर्दिनि देवसिद्ध सुपूजिते हुं फट् स्वाहा – नेत्र त्रयाय वौषट्
देव सिद्ध सुपूजिते हुं फट् स्वाहा – अस्त्राय फट्
ओं भूर्भुवस्सुवरोमिति दिग्बन्ध:
ध्यानं
अद्यारूढा मृगेन्द्रं सजल जलधर श्यामलां हस्त पद्मै:
शूलं बाणं कृपाणं त्वरिजल जगता चाप पाशान् वहंतीं।
चन्द्रोत्तम्सां त्रिनेत्रां चतसृपिरसिखेटान् विदापि: परीतां
कन्याभि: सेव्यमानां प्रतिभटभयदां शूलिनीं भावयामि॥(१)
नम: प्रणव पूर्विके नदजनस्य चिंतामणे ज्वल ज्वलतु शूलिनी त्वमिहपाहि चास्मान् सदा
समस्त रिपु दुष्टग्रह हुं फट् इत्यक्षरै: शिखि:
त्रिसक्तितयुङ्मनोहरे जननी तुभ्यमव्याहते॥(२)।

